# शाण्डिल्यभक्तिसूत्रम्[1]

Edited by Toke Lindegaard Knudsen

Completed: April 1, 2001
Last revised: April 14, 2001

[1]The editions used as the basis of this text are: [MP] Manmathanath Paul: *The One Hundred Aphorisms of Śâṇḍilya*. The Sacred Books of the Hindus, vol. 7, part 2. Allahabad, 1911 (reprinted in 1974 by AMS Press, New York); and [AP] Anshuman Pandey's electronic edition of 14. August 1996 which is available at
`http://sanskrit.bhaarat.com/The_Document_Project/doc_z_misc_major_works/doc_z_misc_major_works.html`

# प्रथमोऽध्यायः

## प्रथममाह्निकम्

1 1 01 अथातो भक्तिजिज्ञासा ॥ १॥
1 1 02 सा परानुरक्तिरीश्वरे ॥ २॥
1 1 03 तत्संस्थस्यामृतत्वोपदेशात् ॥ ३॥
1 1 04 ज्ञानमिति चेन्न द्विषतोऽपि ज्ञानस्य तदसंस्थितेः ॥ ४॥
1 1 05 तयोपक्षयाच्च ॥ ५॥
1 1 06 द्वेषप्रतिपक्षभावाद्रसशब्दाच्च रागः ॥ ६॥
1 1 07 न क्रिया कृत्यनपेक्षणाज्ज्ञानवत् ॥ ७॥
1 1 08 अत एव फलानन्त्यम् ॥ ८॥
1 1 09 तद्वतः प्रपत्तिशब्दाच्च न ज्ञानमितरप्रपत्तिवत् ॥ ९॥

## द्वितीयमाह्निकम्

1 2 01 सा मुख्येतरापेक्षितत्वात् ॥ १०॥
1 2 02 प्रकरणाच्च ॥ ११॥
1 2 03 दर्शनफलमिति चेन्न तेन व्यवधानात् ॥ १२॥
1 2 04 दृष्टत्वाच्च ॥ १३॥
1 2 05 अत एव तदभावाद्वल्लवीनाम् ॥ १४॥
1 2 06 भक्त्या जानातीति चेन्नाभिज्ञप्त्या साहाय्यात् ॥ १५॥
1 2 07 प्रागुक्तं च ॥ १६॥
1 2 08 एतेन विकल्पोऽपि प्रत्युक्तः ॥ १७॥
1 2 09 देवभक्तिरितरस्मिन्साहचर्यात् ॥ १८॥
1 2 10 योगस्तूभयार्थमपेक्षणात् प्रयाजवत् ॥ १९॥
1 2 11 गौण्या तु समाधिसिद्धिः ॥ २०॥
1 2 12 हेया रागत्वादिति चेन्नोत्तमास्पदत्वात् सङ्गवत् ॥ २१॥
1 2 13 तदेव कर्मिज्ञानियोगिभ्य आधिक्यशब्दात् ॥ २२॥
1 2 14 प्रश्ननिरूपणाभ्यामाधिक्यसिद्धेः ॥ २३॥
1 2 15 नैव श्रद्धा तु साधारण्यात् ॥ २४॥
1 2 16 तस्यां तत्त्वे चानवस्थानात् ॥ २५॥
1 2 17 ब्रह्मकाण्डं तु भक्तौ तस्यानुज्ञानाय सामान्यात् ॥ २६॥

समाप्तश्च प्रथमोऽध्यायः ॥ १॥

# द्वितीयोऽध्यायः

## प्रथममाह्निकम्

2 1 01 बुद्धिहेतुप्रवृत्तिराविशुद्धेरवधातवत् ॥ २७॥
2 1 02 तदङ्गानां च ॥ २८॥
2 1 03 तामैश्वर्यपरां काश्यपः परत्वात् ॥ २९॥
2 1 04 आत्मैकपरां बादरायणः ॥ ३०॥
2 1 05 उभयपरां शाण्डिल्यः शब्दोपपत्तिभ्याम् ॥ ३१॥
2 1 06 वैषम्यादसिद्धमिति चेन्नाभिज्ञानवदवैशिष्ट्यात् ॥ ३२॥
2 1 07 न च क्लिष्टः परः स्यादनन्तरं विशेषात् ॥ ३३॥
2 1 08 ऐश्वर्यं तथेति चेन्न स्वाभाव्यात् ॥ ३४॥
2 1 09 अप्रतिषिद्धं परैश्वर्यं तद्भावाच्च नैवमितरेषाम् ॥ ३५॥
2 1 10 सर्वानृते किमिति चेन्नैवम्बुद्ध्यानन्त्यात् ॥ ३६॥
2 1 11 प्रकृत्यन्तरालादवैकार्यं चित्सत्त्वेनानुवर्तमानात् ॥ ३७॥
2 1 12 तत्प्रतिष्ठा गृहपीठवत् ॥ ३८॥
2 1 13 मिथोऽपेक्षणादुभयम् ॥ ३९॥
2 1 14 चेत्याचितोर्न तृतीयम् ॥ ४०॥
2 1 15 युक्तौ च सम्परायात् ॥ ४१॥
2 1 16 शक्तित्वान्नानृतं वेद्यम् ॥ ४२॥
2 1 17 तत्परिशुद्धिश्च गम्या लोकवल्लिङ्गेभ्यः ॥ ४३॥
2 1 18 सम्मानबहुमानप्रीतिविरहेतरविचिकित्सामहिमख्यातितदर्थप्राणस्थानतदीयता-सर्वतद्भावाप्रातिकूल्यादीन् च स्मरणेभ्यो बाहुल्यात् ॥ ४४॥
2 1 19 द्वेषादयस्तु नैवम् ॥ ४५॥
2 1 20 तद्वाक्यशेषात्प्रादुर्भावेष्वपि सा ॥ ४६॥
2 1 21 जन्मकर्मविदश्चाजन्मशब्दात् ॥ ४७॥
2 1 22 तच्च दिव्यं स्वशक्तिमात्रोद्भवात् ॥ ४८॥
2 1 23 मुख्यं तस्य हि कारुण्यम् ॥ ४९॥
2 1 24 प्राणित्वान्न विभूतिषु ॥ ५०॥
2 1 25 द्यूतराजसेवयोः प्रतिषेधाच्च ॥ ५१॥
2 1 26 वासुदेवेऽपीति चेन्नाकारमात्रत्वात् ॥ ५२॥
2 1 27 प्रत्यभिज्ञानाच्च ॥ ५३॥
2 1 28 वृष्णिषु श्रैष्ठ्येन तत् ॥ ५४॥
2 1 29 एवं प्रसिद्धेषु च ॥ ५५॥

## द्वितीयमाह्निकम्

2 2 01 भक्त्या भजनोपसंहाराद्गौण्या परायैतद्धेतुत्वात् ॥ ५६॥
2 2 02 रागार्थप्रकीर्तिसाहचर्याच्चेतरेषाम् ॥ ५७॥
2 2 03 अन्तराले तु शेषाः स्युरुपास्यादौ च काण्डत्वात् ॥ ५८॥
2 2 04 ताभ्यः पावित्र्यमुपक्रमात् ॥ ५९॥
2 2 05 तासु प्रधानयोगात्फलाधिक्यमेके ॥ ६०॥
2 2 06 नाम्नेति जैमिनिः सम्भवात् ॥ ६१॥
2 2 07 अत्राङ्गप्रयोगानां यथाकालसम्भवो गृहादिवत् ॥ ६२॥
2 2 08 ईश्वरतुष्टेरेकोऽपि बली ॥ ६३॥

2 2 09 अबन्धोऽर्पणस्य मुखम् ॥ ६४॥
2 2 10 ध्याननियमस्तु दृष्टसौकर्यात् ॥ ६५॥
2 2 11 तद्यजिः पूजायामितरेषां नैवम् ॥ ६६॥
2 2 12 पादोदकं तु पाद्यमव्याप्तेः ॥ ६७॥
2 2 13 स्वयमर्पितं ग्राह्यमविशेषात् ॥ ६८॥
2 2 14 निमित्तगुणाव्यपेक्षणादपराधेषु व्यवस्था ॥ ६९॥
2 2 15 पत्रादेर्दानमन्यथा हि वैशिष्ट्यम् ॥ ७०॥
2 2 16 सुकृतजत्वात्परहेतुभावाच्च क्रियासु श्रेयस्यः ॥ ७१॥
2 2 17 गौणं त्रैविध्यमितरेण स्तुत्यर्थत्वात्साहचर्यम् ॥ ७२॥
2 2 18 बहिरन्तरस्थमुभयमवेष्टिसववत् ॥ ७३॥
2 2 19 स्मृतिकीर्त्योः कथादेश्चार्तौ प्रायश्चित्तभावात् ॥ ७४॥
2 2 20 भूयसामननुष्ठितिरिति चेदाप्रयाणमुपसंहारान्महत्स्वपि ॥ ७५॥
2 2 21 लघ्वपि भक्ताधिकारे महत्क्षेपकमपरसर्वहानात् ॥ ७६॥
2 2 22 तत्स्थानत्वादनन्यधर्मः खलेवालीवत् ॥ ७७॥
2 2 23 आनिन्द्ययोन्यधिक्रियते पारम्पर्यात्सामान्यवत् ॥ ७८॥
2 2 24 अतो ह्यविपक्वभावानामपि तल्लोके ॥ ७९॥
2 2 25 क्रमैकगत्युपपत्तेस्तु ॥ ८०॥
2 2 26 उत्क्रान्तिस्मृतिवाक्यशेषाच्च ॥ ८१॥
2 2 27 महापातकिनां त्वार्तौ ॥ ८२॥
2 2 28 सैकान्तभावो गीतार्थप्रत्यभिज्ञानात् ॥ ८३॥
2 2 29 परां कृत्वैव सर्वेषां तथा ह्याह ॥ ८४॥

समाप्तश्च द्वितीयोऽध्यायः ॥ २॥

# तृतीयोऽध्यायः

## प्रथममाह्निकम्

3 1 01 भजनीयेनाद्वितीयमिदं कृत्स्नस्य तत्स्वरूपत्वात् ॥ ८५॥
3 1 02 तच्छक्तिर्माया जडसामान्यात् ॥ ८६॥
3 1 03 व्यापकत्वाद्व्याप्यानाम् ॥ ८७॥
3 1 04 न प्राणिबुद्धिभ्योऽसम्भवात् ॥ ८८॥
3 1 05 निर्मायोच्चावचं श्रुतीश्च निर्मिमीते पितृवत् ॥ ८९॥
3 1 06 मिश्रोपदेशान्नेति चेन्न स्वल्पत्वात् ॥ ९०॥
3 1 07 फलमस्माद्बादरायणो दृष्टत्वात् ॥ ९१॥
3 1 08 व्युत्क्रमादप्ययस्तथा दृष्टम् ॥ ९२॥

## द्वितीयमाह्निकम्

3 2 01 तदैक्यं नानात्वैकत्वमुपाधियोगहानादादित्यवत् ॥ ९३॥
3 2 02 पृथगिति चेन्न परेणासम्बन्धात् प्रकाशानाम् ॥ ९४॥
3 2 03 न विकारिणस्तु करणविकारात् ॥ ९५॥
3 2 04 अनन्यभक्त्या तद्बुद्धिर्बुद्धिलयादत्यन्तम् ॥ ९६॥
3 2 05 आयुश्चिरमितरेषां तु हानिरनास्पदत्वात् ॥ ९७॥
3 2 06 संसृतिरेषामभक्तिः स्यान्नाज्ञानात्कारणासिद्धेः ॥ ९८॥
3 2 07 त्रीण्येषां नेत्राणि शब्दलिङ्गाक्षभेदाद्रुद्रवत् ॥ ९९॥
3 2 08 आविस्तिरोभावा विकाराः स्युः क्रियाफलसंयोगात् ॥ १००॥

समाप्तश्च तृतीयोऽध्यायः ॥ ३॥

इति श्रीशाण्डिल्यमहर्षिप्रणीतभक्तिसूत्रम्